वैद्य को निरालस्य होकर प्रतिदिन बालक के निकट निम्नलिखित रक्षा-पाठ पढ़ना चाहिये ॥ ४५ ॥
तपसां तेजसां चैव यशसां वपुषां तथा। निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु ॥४६॥
ग्रहः सेनापतिर्देवो देवसेनापतिर्विभुः। देवसेनारिपुहरः पातु त्वां भगवान्गुहः ॥ ४७ ॥
देवदेवस्य महतः पावकस्य च यः सुतः। गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ ४८ ॥
रक्तमाल्याम्बरधरो रक्तचन्दनभूषितः। रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः ॥ ४९ ॥

रक्षापाठ—तप, तेज, यश तथा शारीरिक स्वास्थ्य के भंडार रूप देव स्वामी कार्तिकेय तुम्हारे ऊपर प्रसन्न होवें, ग्रहों और देवताओं के सेनापति, सेनापति नाम वाले और देवताओं की सेना के शत्रुओं को विनष्ट करने वाले स्वामी कार्तिकेय तुम्हारी रक्षा करें। जो महादेव जी के, अग्नि के, गंगा के, पार्वती के तथा कृत्तिका के पुत्र हैं ऐसे स्वामी कार्तिकेय तुम्हारा कल्याण करें। लाल फूल और वस्त्रों को धारण करने वाले, लाल चन्दन से सुशोभित, और दिव्य लाल शरीर वाले स्वामी कार्तिकेय तुम्हारी रक्षा करें ॥ ४६-४९ ॥

अथ स्कन्दापस्मारग्रहजुष्टचिकित्सामाह—

विल्वः शिरीषो गोलोमी सुरसाऽदिश्च यो गणः। परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ५०

*गोलोमी=श्वेतदूर्वा ॥ ५० ॥

स्कन्दापस्मार ग्रह की चिकित्सा—श्रीफल, सिरस, सफेद दूब और निम्नलिखित सुरसादि गण की ओषधियों के काढ़े से परिसेचन करना चाहिये ॥ ५० ॥

सुरसा श्वेतसुरसा पाठा फञ्जी फणिज्जकः। सौगन्धिकं भूस्तृणको राजिका श्वेतबर्बरी॥५१॥
कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी। विडङ्गमथ निर्गुण्डी कर्णिकार उदुम्बरः ॥ ५२ ॥
बला च काकमाची च तथा च विषमुष्टिका। कफक्रिमिहरः ख्यातः सुरसाऽऽदिरयं गणः॥५३॥

*सुरसा=कृष्णतुलसी, श्वेतसुरसा=श्वेततुलसी, फञ्जी=भार्गी, फणिज्जकः=मरुबकः, सौगन्धिकं=कह्लारम्। भूस्तृणकः=सुगन्धतृणम्, अनेनैव नाम्ना गौडादौ प्रसिद्धः। खरपुष्पा=बर्बरी। कासमर्दः="कसौंदी" अनेनैव नाम्ना प्रसिद्धः। विषमुष्टिः="बका" इति लोके ॥ ५१-५३ ॥

सुरसादि गण की ओषधियां—काली और सफेद तुलसी, पाढ़, भारंगी, मरुआ, कहार नाम सुगंधित कुमुद, सुगन्धित तृण, राई, सफेद वन तुलसी, कायफर, ममरी (बनतुलसी), कलौंजी, सनई, वायविडंग, मेउड़ी, अमिलतास, गूलर, बरियारा, मकोय और कुचिला ये सब ओषधियाँ सुरसादि गण बनाती हैं। यह गण कफ और कृमि के नाश करने में प्रसिद्ध है ॥ ५१-५३ ॥

अष्टमूत्रविपक्वं च तैलमभ्यञ्जने हितम् ॥ ५४ ॥
गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा। मूत्राष्टकमिदं ख्यातं सर्वशास्त्रेषु सम्मतम् ५५

गाय, बकरी, भेंड़, भैंस, घोड़ा, गदहा, ऊंट और हाथी इन आठों का मूत्र अष्टमूत्र कहलाता है। इनमें पकाया हुआ तैल स्कन्दापस्मार ग्रहाविष्ट बालक के शरीर में मालिश करने से बहुत लाभ करता है ॥ ५४-५५ ॥

क्षीरिवृक्षकषायेण काकोल्यादिगणेन च। विपक्तव्यं घृतं पश्चाद्दातव्यं पयसा सह ॥ ५६ ॥

*काकोल्यादिगणेन कल्कीकृतेन तैलं पक्तव्यम् ॥ ५६ ॥

क्षीरिवृक्षों के काढ़े से और काकोल्यादि गण की ओषधियों के कल्क से सिद्ध किया हुआ घृत, दूध में मिलाकर बच्चे को पिलाना चाहिये ॥ ५६ ॥

काकोली क्षीरकाकोली जीवकर्षभकौ तथा। ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका ॥५७॥
मुद्गपर्णी माषपर्णी पद्मकं वंशलोचना। शृङ्गी प्रपौण्डरीकञ्च जीवन्ती मधुयष्टिका ॥ ५८ ॥
द्राक्षा चेति गणो नाम्ना काकोल्यादिरुदीरितः। स्तन्यकृद् बृंहणो वृष्यः पित्तरक्तमलापहः५९

काकोल्यादि गण—काकोली, क्षीरकाकोली, जीवक, ऋषभक, ऋद्धि, वृद्धि, मेदा, महामेदा,

गुरुच, वनमूंग, वनवरदी, पणाख, वंशलोचन, काकड़ासिंगी, पुंडरीक वृक्ष, जीवन्ती, मुलेठी और दाख ये सब मिलकर काकोल्यादिगण बनाती हैं। यह गण दूध बढ़ाने वाला, बृंहण, वीर्यवर्द्धक तथा रक्तपित्त और कामला को नष्ट करने वाला है ॥ ५७–५९ ॥

उत्सादनं वचा हिङ्गुयुक्तमत्र प्रकीर्त्तितम्। गृध्रोलूकपुरीपाणि केशा हस्तिनखो घृतम् ॥६०॥
वृषभस्य च रोमाणि योज्यान्युद्धूपने सदा। अनन्तां कुक्कुटीं बिम्बीं मर्कटीञ्चापि धारयेत् ६१

*अनन्ता=जवासा। कुक्कुटी=शाल्मली ॥ ६०–६१ ॥

वच और हींग का लेप लगाना चाहिये। गिद्ध और उल्लू पक्षी का विष्ठा, बाल, हाथी का नख, घी, बैल का रोआँ, इन सबकी धूनी देना चाहिये। जवासा, सेमर, कुन्दरू और केवाच या करंज को तागे में बाँध कर बच्चे के गले में बाँध देना चाहिये। ये सब उपचार स्कन्दापस्मार ग्रह में हितकर होते हैं ॥ ६०–६१ ॥

पक्वापक्वानि मांसानि प्रसन्ना रुधिरं पयः। मुद्गौदनं निवेद्याय स्कन्दापस्मारिणे वटे ॥६२॥

*वटे=वटतले, बलिं निवेद्येत्यन्वयः ॥ ६२ ॥

कच्चे और पकाये हुये मांस, मदिरा, रक्त, दूध, मूंग और भात इन सबकी स्कन्दापस्मार ग्रह को शान्ति के लिये बड़ के पेड़ के नीचे बलि देना चाहिये ॥ ६२ ॥

चतुष्पथे कारयेच्च स्नानं तेन ततः पठेत् ॥ ६३ ॥

*तेन=स्कन्दापस्मारिणा, स्नानं कारयेदित्यन्वयः ॥ ६३ ॥

स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा। विशाखः स शिशोरस्य शिवायास्तु शुभाननः ६४

चौराहे में स्नान कराके बच्चे के निकट निम्नलिखित मन्त्र पढ़े—

स्कन्दापस्मार नामक बालग्रह जो स्कन्द का प्रिय सखा है और जिसे विशाख भी कहते हैं तथा जो सुन्दर मुख वाला है, इस बालक की रक्षा करे ॥ ६३–६४ ॥

अथ शकुनिग्रहजुष्टचिकित्सामाह—

शकुनिग्रहजुष्टस्य कार्यं वैद्येन जानता। वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ॥ ६५ ॥

शकुनी ग्रह की चिकित्सा—शकुनी ग्रहाविष्ट बालक का बेत, आम और कैथ के काढ़े से सेचन कराना चाहिये ॥ ६५ ॥

ह्रीवेरमधुकोशीरसारिवोत्पलपद्मकैः। लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥ ६६ ॥

*प्रदिहेद्=लिम्पेत्। दिह्यादिति सिद्धे दिहेदिति रूपसिद्धरार्षत्वात् ॥ ६६ ॥

सुगन्धबाला, मुलेठी, खश, सारिवा, नीला कमल, पद्माख, लोध, फूलप्रियङ्गु, मजीठ और गेरू इनसे बच्चे को लेप लगाना चाहिये ॥ ६६ ॥

स्कन्दग्रहोक्ता धूपाश्च हिता अत्र भवन्ति हि। स्कन्दापस्मारशमनं घृतमत्रापि पूजितम् ॥६७॥

स्कन्दापस्मार की चिकित्सा में कहे हुये धूपन और घृत का शकुनी ग्रह में भी उपयोग करना लाभदायक है ॥ ६७ ॥

शतावरीमृगैर्वारुनागदन्तीनिदिग्धिकाम्। लक्ष्मणां सहदेवीं च बृहतीं चापि धारयेत् ॥६८॥

*मृगैर्वारुः=बृहती इन्द्रवारुणी। नागदन्ती="नागदुली"ति लोके प्रसिद्धा ॥ ६८ ॥

शतावर, इनारुन, नागदवन, भटकटैया, लक्ष्मणा ( अभाव में सफेद भटकटैया ), सहदेई और बड़ी भटकटैया इन सबको बच्चे को धारण भी करावे ॥ ६८ ॥

तिलतण्डुलकं माल्यं हरितालं मनःशिला। बलिरेषा करञ्जे तु निवेद्यो नियतात्मना ॥६९॥
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथाविधि। श्वेताशिरीषगन्धाढ्यमधुगुग्गुलुधूपैः ॥७०॥
सिद्धमभ्यञ्जने तैलं धारणं पूर्वमेव तु। शकुनिग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम् ॥ ७१ ॥

तिल, चावल, फूल, माला, हरिताल और मैनसिल इनका सावधानी के साथ करंज के पेड़ के नीचे बलिदान देवे। उसी बलिदान के समीप बालक को यथाविधि स्नान करावे और सफेद दूब,

सिरस, असगन्ध, दूध, गूगुल और सरसों से पकाया हुआ तेल पहले से ही तैयार रक्खे स्नान कराने के बाद इसीसे मालिश करे और हितकर लेपों का प्रयोग करे जिससे शकुनी ग्रह शान्त हो जाय ६९-७१

कुर्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः। निकुम्भोक्तेन विधिना स्नापयेत्तं ततः पठेत्॥७२

निकुम्भः = शिवस्य गणविशेषस्तेनोक्तेन विधिना ॥ ७२ ॥

सुन्दर फूलों से शकुनी की अनेकों प्रकार से पूजा करे तत्पश्चात् शिवजी के निकुम्भ नामक गण द्वारा कही हुई विधि से बालक को स्नान कराके उसके निकट निम्नलिखित पाठ करे ॥ ७२ ॥

अथ शिशुरक्षायां देव्याः स्तुतिमाह—

अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता। अधोमुखी सूक्ष्मतुण्डा शकुनी ते प्रसीदतु ॥ ७३ ॥

दुर्दर्शना महामाया पिङ्गाक्षी भैरवस्वरा। लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ७४ ॥

बालक की रक्षा के लिये देवी की स्तुति—आकाश में विचरण करने वाली, सम्पूर्ण आभूषणों से सुशोभित, अधोमुखी तथा सूक्ष्म मुख वाली शकुनी देवी तुम्हारे ऊपर प्रसन्न हों। भयङ्कर दर्शनवाली, बड़े शरीर वाली, पीले वर्ण वाली, भयंकर स्वर वाली, लम्बे पेट वाली तथा शंकु की भाँति कान वाली शकुनी देवी तुम्हारे ऊपर प्रसन्न हों ॥ ७३-७४ ॥

अथ रेवतीग्रहजुष्टचिकित्सामाह—

अश्वगन्धाऽजशृङ्गी च सारिवाऽथ पुनर्नवा। सहा विदारी चैतासां क्वाथेन परिषेचनम् ॥७५॥

*अजशृङ्गी = ( मेढाशृङ्गी )। सहा = (सेवती) पुष्पजातिः ॥ ७५ ॥

रेवतीग्रहाविष्ट की चिकित्सा—असगन्ध, मेढासिंगी, सारिवा, गदहपूर्ना, सेवती और विदारीकन्द इन सबके काढ़े से सेचन करे ॥ ७५ ॥

तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसे तथा। पलङ्कषायां नलदे तथा गौरकदम्बके ॥ ७६ ॥

*सर्जरसः = "राल" इति लोके। पलङ्कषा = गुग्गुलुः। नलदं = लामज्जकम् 'उशीरवत्पीतच्छविः। गौरकदम्बकः = हारिद्रिकः "हरदुआ कदम्ब" इति लोके ॥ ७६ ॥

कूट, राल, गुग्गुल, लामज्जक तृण और हलदिया कदम्ब इनके कल्क से पकाये हुये तेल की मालिश करे ॥ ७६ ॥

धवाश्वकर्णककुभधातकीतिन्दुकेषु च। काकोल्यादौ गणे चापि सिद्धं सर्पिः पिबेच्छिशुः ॥७७॥

*अश्वकर्णः = "साखू" इति लोके प्रसिद्धः ॥ ७७ ॥

धव, साखू, अर्जुन, सलई, तेंदू और काकोल्यादि गण की ओषधियों के कल्क से पकाया हुआ घी बच्चे को पिलावे ॥ ७७ ॥

कुलत्थं शङ्खचूर्णञ्च प्रदेहः साश्वगन्धिकः। गृध्रोलूकपुरीषाणि यवान् यवफलो घृतम्।

सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः ॥ ७८ ॥

*यवफलो = वंशाङ्कुरः ॥ ७८ ॥

कुलथी, शंख का चूर्ण और असगन्ध इनका लेप करना चाहिये। गृध्र और उल्लू पक्षी का विष्ठा, जव, बांस का अङ्कुर और घी इनको मिलाकर प्रातः सायं बच्चे को धूनी देवे ॥ ७८ ॥

शुक्लाः सुमनसो लाजाः पयः शाल्योदनं दधि। बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥७९॥

*गोतीर्थं = गोष्ठे ॥ ७९ ॥

सफेद फूल, लावा ( धान का ), दूध, लालशालि का भात और दही इन पदार्थों को पवित्र शरीर से रेवती ग्रह के लिये गोष्ठ ( गायों के रहने की जगह ) में बलि देवे ॥ ७९ ॥

स्नानं धात्रीकुमाराभ्यां सङ्गमे कारयेद्भिषक्। नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥८०॥

चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु। उपासते यां सततं देव्यो विविधभूषणाः ॥८१॥

लम्बा कराला विनता तथैव बहुपुत्रिका। रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ॥ ८२ ॥

समुद्र और नदी के सङ्गम पर अथवा दो नदियों के सङ्गम पर बालक और उसकी माता को स्नान

कराके निम्नलिखित मन्त्र-पाठ करे-'अनेकों प्रकार के वस्त्र धारण करने वाली, चित्र-विचित्र रङ्ग की माला और लेपन धारण करने वाली, चञ्चल कुण्डलों वाली और श्यामवर्णवाली रेवती देवी तुम्हारे ऊपर प्रसन्न हों, लम्बी, विकराल, विनता, बहुत पुत्रों वाली, शुष्क नासिका वाली, और अनेकों प्रकार के आभूषणों द्वारा सुशोभित देवियों द्वारा सदा सेवित रेवती देवी तुम्हारे ऊपर प्रसन्न हों ॥ ८०—८२ ॥

अथ पूतनाग्रहजुष्टचिकित्सामाह—

कपोतवङ्का श्योनाको वरुणः पारिभद्रकः । आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ८३

*कपोतवङ्का=ब्राह्मी । आस्फोता=अपराजिता ॥ ८३ ॥

पूतनाग्रहाविष्ट की चिकित्सा—ब्राह्मी, सोनापाढ़ा, वरुना, फरहद या नीम और अपराजिता, इनके काढ़े से बच्चों को सेचन कराना चाहिये ॥ ८३ ॥

नवा पयस्या गोलोमी हरितालं मनःशिला । कुष्ठं सर्जरसश्चैव तैलार्थे कल्क इष्यते ॥ ८४ ॥

*नवा पयस्या=नूतना क्षीरविदारी । गोलोमी=श्वेतदूर्वा ॥ ८४ ॥

नवीन क्षीरविदारी ( विदारीकन्द ), सफेद दूब, हरताल, मैनसिल, कूठ और राल इनके कल्क से तेल बनाकर मालिश के लिये प्रयोग करे ॥ ८४ ॥

हितं घृतं तुगाक्षीर्या संसिद्धं मधुकेन च । कुष्ठतालीसखदिराः स्यन्दनोऽर्जुन एव च ॥ ८५ ॥

पनसः ककुभश्चापि मज्जानो बदरस्य च । कुक्कुटास्थि घृतं चापि धूपनं सह सर्षपैः ॥ ८६ ॥

*स्पन्दनः="स्पन्दन" इत्येवं नाम्ना प्रसिद्धः ॥ ८५-८६ ॥

वंशलोचन और मुलेठी से पकाया हुआ घी भी हितकारक है । कूठ, तालीसपत्र, खैर, स्पन्दन, अर्जुन, कटहर, अर्जुन, बेर की मींगी, मुर्गे की हड्डी सरसों और घी इन सबकी धूनी देनी चाहिये ८५—८६

काकादनीं चित्रफलां बिम्बीं गुञ्जाश्च धारयेत् ॥ ८७ ॥

*काकादनी=श्वेतगुञ्जा । चित्रफला=बृहदिन्द्रवारुणी ॥ ८७ ॥

सफेद गुंजा, बड़ी इनारुन, कुँदरू और लाल घुंघची इन्हें धारण कराना चाहिये ॥ ८७ ॥

मत्स्यौदनं बलिं दद्यात्कृशरां पललं तथा । शरावसम्पुटे कृत्वा तस्य शून्ये गृहे भिषक् ॥८८॥

मछली, भात, तिलयुक्त खिचड़ी और मांस इनको सकोरे में बन्द करके सूने घर में वैद्य, पूतना को बलि देवे ॥ ८८ ॥

उत्सृष्टान्नाभिषिक्तस्य शिशोः स्नपनमिष्यते । कुष्ठतालीसखदिरं चन्दनं स्पन्दनं तथा ॥८९॥

देवदारु वचा हिङ्गु कुष्ठं गिरिकदम्बकम् । एला हरेणवश्चापि योज्या उद्धूपने सदा ॥ ९० ॥

मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा । शून्यागारस्थिता देवी दारकं पातु पूतना ॥ ९१ ॥

बच्चे को जूठे अन्न से मलकर फिर स्नान करावे और कूठ, तालीसपत्र, खैर, चन्दन, स्पन्दन, देवदारु, वच, हींग, कूठ, पहाड़ी कदम्ब, छोटी इलायची, रेणुका इन सबकी धूनी देवे। इसके बाद बालक के निकट रक्षा-पाठ करे कि "गन्दे कपड़े धारण करने वाली, मलिन अङ्गों वाली, रूखेबालों वाली तथा सूने घरों में रहने वाली पूतना देवी इस बच्चे की रक्षा करें ॥ ८९-९१ ॥

अथ गन्धपूतनाग्रहजुष्टचिकित्सामाह—

तिक्तद्रुमाणां पत्रेषु क्वाथः कार्योऽभिषेचने ॥ ९२ ॥

गन्धपूतना-ग्रहजुष्ट की चिकित्सा—बालक के शरीर पर निम्न लिखित तिक्त वृक्षों के क्वाथ से सेचन करना चाहिये ॥ ९२ ॥

अथ तिक्तद्रुमानाह—

निम्बः पटोलः क्षुद्रा च गुडूची वासकस्तथा । विसर्पकुष्ठनुत्ख्यातो गणोऽयं पञ्चतिक्तकः॥९३॥

तिक्त वृक्ष—नीम, परोरा, भटकटैया, गुरुच, अडूसा ये पञ्चतिक्त कहलाते हैं और विसर्प तथा कुष्ठ को नाश करने के लिये प्रसिद्ध हैं ॥ ९३ ॥

पिप्पली पिप्पलीमूलं चित्रको मधुको मधु। शालिपर्णी बृहत्यौ च घृतार्थं च समाहरेत्।
सर्वगन्धैः प्रदेहश्च गात्रे चाक्ष्णोश्च शीतलैः॥ ९४॥

*सर्वगन्धैः कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनैः सह। अक्ष्णोस्तु शीतलैश्चन्दनकर्पूरैः, न तु कस्तूरीकुङ्कुमागुरुभिस्तेषामुष्णत्वात्॥ ९४॥

पीपर, पिपरामूल, चित्ता, मुलेठी, मधु, सरिवन, बड़ी कटेरी और छोटी कटेरी इनसे घी पका कर प्रयोग करना चाहिये और सर्वगन्ध से अर्थात् केशर, अगर, कपूर, कस्तूरी और चन्दन से शरीर में लेप करे तथा चन्दन और कपूर से आँख के समीप भाग में लेप करे क्योंकि केशर आदि उष्ण होने से नेत्रो के लिये हानिकारक होंगी॥ ९४॥

पुरीषं कौक्कुटं केशाश्चर्मं सर्पभवं तथा। जीर्ण चामीक्ष्णशो वासो धूपनायोपकल्पयेत्॥९५॥

मुर्गे की विष्ठा, बाल, साँप की केंचुल और पुराना वस्त्र इनकी धूनी देवे॥ ९५॥

कुक्कुटीं मर्कटीं बिम्बीमनन्तां चापि धारयेत्। मांसं सामं तथा पक्वं शोणितं च चतुष्पथे ९६
निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः। कराला पिङ्गला मुण्डा कषायाम्बरसंवृता।
देवी बालमिमं प्रीता रक्ष त्वं गन्धपूतने!॥ ९७॥

सेमर, केवाच, कुंदरू और जवासा कच्चा और पका मांस तथा रक्त का चौराहे में बलिदान देकर बालक को घर के भीतर स्नान करावे और निम्न मन्त्र पढ़े—को बच्चे के शरीर पर धारण करावे तथा विकराल, पीले वर्ण वाली, मुण्डित और गेरुये वस्त्र को धारण करने वाली हे गन्धपूतना देवी! प्रसन्न होकर इस बच्चे की रक्षा करो॥ ९६–९७॥

अथ शीतपूतनाग्रहजुष्टचिकित्सामाह—

गोमूत्रं चाश्वमूत्रञ्च मुस्तां चामरदारु च। कुष्ठञ्च सर्वगन्धांश्च तैलार्थमवधारयेत्॥ ९८॥

*सर्वगन्धान्=चन्दनादीन्॥ ९८॥

शीतपूतना-ग्रहाविष्ट की चिकित्सा—गोमूत्र, घोड़े का मूत्र, नागरमोथा, देवदारु, कूट, केशर, अगर, कपूर, कस्तूरी और चन्दन इनसे पकाये हुये तेल से मालिश करे॥ ९८॥

रोहिणीनिम्बखदिरपलाशककुभत्वचः। निष्क्वाथ्य तस्मिन्निष्क्वाथे सक्षीरे विपचेद् घृतम्॥९९॥

कुटकी, नीम, खैर, पलाश और अर्जुन की छाल इन सबका काढ़ा बनाकर उसी काढ़े में दूध डालकर उसी से घी सिद्ध करके बच्चे को पिलावे॥ ९९॥

गृध्रोलूकपुरीषाणि बस्तगन्धामहित्वचम्। निम्बपत्राणि च तथा धूपनार्थं समाहरेत्॥१००॥

गीध और उल्लू की विष्ठा, वनतुलसी, साँप की केंचुल तथा नीम के पत्ते इनकी धूनी देनी चाहिये॥ १००॥

धारयेदपि गुञ्जां च वलां काकादनीं तथा। नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम्॥१०१॥
जलाशयान्ते बालस्य स्नपनं चोपदिश्यते॥ १०२॥

*जलाशयान्ते=जलाशयतीरे॥ १०२॥

देव्यै देयश्चोपहारो वारुणी रुधिरं तथा। मुद्गौदनाशिनी देवी सुराशोणितपायिनी।
जलाशयरता नित्यं पातु त्वां शीतपूतना॥ १०३॥

लाल गुञ्जा, बरियारा और सफेद गुञ्जा को धारण करे। नदी में मूंग और भात से शीतपूतना को तृप्त करे। बच्चे को जलाशय के किनारे पर स्नान कराके शराब और रक्त का शीतपूतना देवी को बलिदान देवे। तत्पश्चात् बालक के समीप यह मन्त्र पढ़े कि—"मूंग और भात भक्षण करने वाली, मदिरा और रक्त पीने वाली तथा जलाशय के निकट सदा रहने वाली शीतपूतना देवी तुम्हारी रक्षा करें"॥ १०१–१०३॥

अथ मुखमण्डिकाग्रहजुष्टचिकित्सामाह—

कपित्थं बिल्वतर्कारीवाशा गन्धर्वहस्तकः । कुबेराक्षी च योज्याः स्युर्योग्यानां परिषेचने १०४

*तर्कारी = "गनियार" इति लोके । गन्धर्वहस्तकः = श्वेत एरण्डः । कुबेराक्षी = 'पाढरि" ( पाढल ) इति लोके ॥ १०४ ॥

मुखमण्डिका ग्रह-जुष्ट की चिकित्सा—कैथ, बेल, अरनी, अडूसा, सफेद रेंड और पाढल इनके काढे से बालकों का सेचन कराना चाहिये ॥ १०४ ॥

स्वरसेर्भृङ्गवृक्षाणां तथैव हयगन्धया । तैलं वसां च संयोज्य पचेदभ्यञ्जनं शिशोः ॥ १०५ ॥

*भृङ्गवृक्षः "भगेरा" इति लोके ॥ १०५ ॥

भगरैया के स्वरस और असगन्ध से तेल और चर्बी दोनों एक में मिलाकर पकावे और इसी से बालक के शरीर पर मालिश करे ॥ १०५ ॥

वचा सर्जरसं कुष्ठं सर्पिश्चोद्धूपने हितम् । वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥ १०६ ॥

मनःशिलां चोपहरेद् गोष्ठमध्ये बलिं सतः ॥ १०७ ॥

पायसं सपुरोडाशं तद्बल्यर्थमुपाहरेत् । मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ १०८ ॥

वच, राल, कूठ और घी की धूनी देनी चाहिये। नन्हें के छिलके का चूर्ण, चूर्णक, फूलों की माला, अञ्जन, पारा, मैनसिल इन सबको गोशाले में मुखमण्डिका के लिये अर्पण करके खीर, पुरोडाश ( कड़ा हलुवा ) का बलिदान देवे। तत्पश्चात् निम्नलिखित मन्त्र से अभिमन्त्रित जल द्वारा उसी स्थान पर बच्चे को स्नान करावे ॥ १०६-१०८ ॥

अथ जलाभिमन्त्रणमन्त्रमाह—

अलङ्कृता कामवती सुभगा कामरूपिणी । गोष्ठमध्यालया या तु पातु त्वां मुखमण्डिका १०९

जल को अभिमन्त्रित करने का मन्त्र—अलङ्कारों से शोभायमान, काम से युक्त, सुन्दर और यथेष्ट रूपों को धारण करने वाली, गौओं के निवास स्थान में रहने वाली मुखमण्डिका देवी तुम्हारी रक्षा करें ॥ १०९ ॥

अथ नैगमेयग्रहजुष्टचिकित्सामाह—

बिल्वाग्निमन्थपूतीकैः कार्यं स्यात्परिषेचितम् ॥ ११० ॥

*पूतीकः = घोराकरञ्जः ॥ ११० ॥

नैगमेय ग्रह जुष्ट की चिकित्सा—बेल, अरनी और पूतिकरञ्ज के काढे से बच्चे का परिषेचन करे ॥ ११० ॥

प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः । पचेत्तैलं सगोमूत्रं दधिमस्त्वम्लकाञ्जिकैः ॥ १११ ॥

*कुटन्नटं = त्रिपुत्रकनाम्नो वृक्षविशेषस्य त्वक् "गुडतजी" इति लोके । मुस्ताकृतिः— श्योनाकं वा ॥ १११ ॥

फूल प्रियङ्गु, सरल, सारिवा, सोया, गुडतजी, गोमूत्र, दही का तोड़ और खट्टी कांजी इन से तेल पकाकर प्रयोग करे ॥ १११ ॥

वचां वयस्थां जटिलां गोलोमीञ्चापि धारयेत् ॥ ११२ ॥

*वयस्था = आमलकी गुडूची वा । जटिला = जटामांसी, गोलोमी = श्वेतवचा ॥ ११२ ॥

वच, आँवला या गुरुच, जटामासी (बालछड़), सफेद वच इनको बच्चे के शरीर पर धारण कराना चाहिये ॥ ११२ ॥

उत्सादनं हितञ्चात्र स्कन्दापस्मारनाशनम् । मर्कटोलूकगृध्राणां पुरीषाणि प्रधूपनम् ।

धूपः सुतनने कार्यो बालस्य हितमिच्छता । तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ।

कौमारभृत्ये मेषाय प्लक्षमूले निवेदयेत् ॥ ११३ ॥

*कौमारभृत्ये = बालरक्षायाम् । मेषाय = नैगमेयग्रहाय ॥ ११३ ॥

इस ग्रह में भी स्कन्दापस्मारनाशक लेप उबटन हितकर होता है। बन्दर, उल्लू पक्षी और

गिद्ध के विष्ठे की धूनी बालक का हितचिन्तक व्यक्ति सब लोगों के सो जाने पर देवे। बालक की रक्षा के लिये तिल, चावल, फूलों की माला और अनेकों प्रकार का भक्ष्य पदार्थ का पकड़ी के पेड़ की जड़ में नैगमेय ग्रह के लिये बलिदान देवे ॥ ११३ ॥

सधस्तात्क्षीरवृक्षस्य स्नपनञ्चोपदिश्यते ॥ ११४ ॥

अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः। बालपालयिता देवो नैगमेयोऽभिरक्षतु ॥ ११५ ॥

किसी दूध वाले वृक्ष के नीचे बालक को स्नान करावे और यह मन्त्र पढ़े—"बकरे के समान मुख वाले, चञ्चल भौंह और नेत्रों वाले, इच्छानुकूल स्वरूप धारण करने वाले, महायशस्वी और बालकों की रक्षा करने वाले नैगमेय देव इस बालक की रक्षा करें ॥ ११४-११५ ॥

अथ बालरोगाणां निदानलक्षणमाह—

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा। दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ११६

मिथ्याऽऽहारविहारिण्या दुष्टा वातादयस्त्रयः। दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ११७

बालरोगों का निदान—धाय के गुरु, विषम और दोषोत्पादक या प्रकोपक आहारादि के सेवन करने से उसके शरीरगत दोष प्रकुपित होकर दूध को दूषित कर देते हैं। मिथ्या आहार-विहार करने वाली स्त्री के वातादि तीनों दोष प्रकुपित होकर उसके दूध को भी दूषित कर देते हैं। ऐसे दूध को पीने के कारण बच्चों में भी रोग उत्पन्न होजाता है ॥ ११६-११७ ॥

वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः। क्षामस्वरः कृशाङ्गः स्याद् बद्धविण्मूत्रमारुतः ॥११८॥

वात से दूषित दूध को पीने वाला बालक वातजन्य रोगों से पीड़ित रहता है और उसका स्वर क्षीण, शरीर कृश होता जाता है तथा उस के मल और मूत्र रुक जाते हैं ॥ ११८ ॥

स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान्। तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ११९

पित्त से दूषित दुग्ध को पीने से बालक को पसीना और पतला दस्त आता है, कामला तथा पित्तजन्य अन्य रोग भी होते हैं, प्यास लगती है और समस्त शरीर में गरमी रहती है ॥ ११९ ॥

श्लेष्मदुष्टं पिबन्क्षीरं लालालुः श्लेष्मरोगवान्। निद्रार्दितो जडः शूनो रक्ताक्षश्छर्दनः शिशुः १२०

कफ से दूषित दूध को पीने से बच्चे के मुख से लार गिरती है, कफजन्य अन्य रोग होते हैं, नींद बहुत आती है, शरीर भारी रहने से बच्चा जकड़ा हुआ रहता है और उस में चञ्चलता नहीं रहती, सूजन होती है, आंखें लाल हो आती हैं, उलटी होती है ॥ १२० ॥

द्वन्द्वजं द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ॥ १२१ ॥

दो दो दोषों से दूषित दूध के पीने से बच्चे में दो दो दोषों के मिश्रित लक्षण मिलते हैं और त्रिदोष से दूषित दूध पीने से बच्चे में जो रोग पैदा होता है उस में तीनों दोषों के लक्षण मिलते हैं ॥१२१॥

ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः। बालानामपि ते तद्वद् बोद्धव्या भिषगुत्तमैः १२२

ज्वरादि रोग जो बड़ों में होते हैं वे बच्चों में भी हुआ करते हैं उनके लक्षण और निदानादि को बड़ों की भांति ही चतुर वैद्य को समझ लेना चाहिये ॥ १२२ ॥

बालानामेव ये रोगा भवन्ति महतां न च। तालुकण्टकमुख्यांस्तानवधारय यत्नतः ॥१२३॥

जो रोग केवल बच्चों में ही होते हैं किन्तु बड़ों में नहीं होते वे तालुकण्टकादि हैं। इनको इसी प्रकरण में कहा जाता है यत्नपूर्वक ध्यान से सुनो ॥ १२३ ॥

तत्रादौ तालुकण्टकलक्षणमाह—

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्। तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥१२४॥

तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम्। तृडक्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः ॥१२५॥

*पानं स्तनस्य, शकृद्द्रवं=द्रवरूपम् ॥ १२६ ॥

तालुकण्टक के लक्षण—कफ प्रकुपित होकर तालु के मांस में तालुकण्टक नामक रोग उत्पन्न करता है। इससे शिरगत तालु प्रदेश में गढ़ा होजाता है, तालू नीचे गिर जाता है, बच्चा

स्तनपान नहीं करता या बहुत कठिनाई से तनिक सा पीता है, पाखाना बहुत पतला आता है, प्यास लगती है, आंख में, गले में और मुख में पीड़ा होती है, गरदन को गिराता है और वमन होती है ॥ १२४-१२५ ॥

अथ महापद्मकलक्षणमाह—

वीसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः । पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः ।
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् ॥ १२६ ॥

*पद्मवर्णः=लोहितवर्णः, तत्र शीर्षजो वीसर्पः । शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् । एवं वस्तिजो गुदं याति गुदतो हृदयं, हृदयाच्छिरो यातीति बोद्धव्यम् ॥ १२६ ॥

महापद्मक के लक्षण—बच्चों के शिर में तथा मूत्राशय के स्थान ( पेडू ) पर लालवर्ण का त्रिदोषज विसर्प उत्पन्न होता है । इसे महापद्मक कहते हैं । शिर पर होने वाला महापद्मक कनपटियों से होता हुआ हृदय में आता है और हृदय से फिर गुदा तक में चला जाता है । इसी प्रकार पेडूपर होने वाला यह विसर्प गुदा तक जाता है फिर गुदा से हृदय तक और हृदय से शिर तक फैल जाता है ॥१२६

अथ कुकूणकलक्षणमाह—

कुकूणकं क्षीरदोषाच्छिशूनामेव वर्त्मनि । जायते सरुजं नेत्रं कण्डूरं प्रस्रवेद् बहु ॥ १२७ ॥
शिशुः कुर्याल्ललाटाक्षिकूटनासाप्रघर्षणम् । शक्तो नार्कप्रभां द्रष्टुं न चास्युन्मीलनक्षमः १२८

*कुकूणकं="कोथुआइ" इति लोके ॥ १२७-१२८ ॥

कुकूणक के लक्षण—दूध के दोष से बच्चों की पलकों में ( भीतर ) कुकूणक नामक रोग होता है । इस रोग में नेत्र में पीड़ा और खुजली होती है । नेत्र से पानी गिरता है । ललाट, अक्षिगोलक और नासिका को बालक घिसता है तथा सूर्य का प्रकाश नहीं देख सकता है और न तो आंख ही खोलता है ॥ १२७-१२८ ॥

अथ तुण्डिगुदपाकयोर्लक्षणमाह—

वातेनाध्मापिता नाभिः सरुजा तुण्डिरुच्यते। बालस्य गुदपाकाख्यो व्याधिः पित्तेन जायते१२९

तुण्डी और गुदपाक के लक्षण—प्रकुपित वायु के कारण नाभि फूल आती है और उसमें पीड़ा होती है । इसे तुण्डी कहते हैं । पित्त के कारण बच्चों की गुदा पक जाती है इसे गुदपाक कहते हैं ॥ १२९ ॥

अथाहिपूतनलक्षणमाह—

शकृन्मूत्रसमायुक्ते धाव्नेऽपाने शिशोर्भवेत्। स्विन्ने वा स्नाप्यमानस्य कण्डू रक्तकफोद्भवा १३०
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते । एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥१३१॥

*स्विन्ने=स्वेदिते ॥ १३०-१३१ ॥

अहिपूतन के लक्षण—बालक की विष्ठा तथा मूत्र से लिप्त गुदा को न धोने से अथवा बालक के पसीने को या नहाने पर पानी को न पोंछने से बच्चों को रक्त और कफ के कारण खुजली हो जाती है। इस खुजलाने से शीघ्र फुड़ियां उत्पन्न होती हैं जिससे स्राव होता है। ये सब फुड़ियां एक में मिलकर भयानक व्रण बना देती हैं। इसी को 'अहिपूतन' कहते हैं ॥ १३०-१३१ ॥

अथाजगल्लिकालक्षणमाह—

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा। कफवातोत्थिता ज्ञेया बालानामजगल्लिका१३२

अजगल्लिका के लक्षण—चिकनी, आस पास के स्वस्थ चर्म के समान रंगवाली, पीड़ा रहित, गुथी सी और मूंग के समान आकार वाली जो फुड़िया बच्चों को होती है उसी को 'अजगल्लिका' कहते हैं। यह कफ और वायु से उत्पन्न होती है ॥ १३२ ॥

अथ पारिगर्भिकलक्षणमाह—

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि।कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः१३३
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम्।रोगं परिभवाख्यं च तत्र युञ्जीत दीपनम् ॥१३४॥

*"पिबन्नपो"त्यपिशब्दादपिबन्नपि । पारिगर्भिकः="अहीडी"ति लोके । परिभवाख्यं=परिभवेति नामान्तरम् ॥ १३३-१३४ ॥

पारिगर्भिक के लक्षण—बच्चा गर्भवती माता का दूध पीवे अथवा न पीवे तो भी उसे खांसी, अग्निमान्द्य, वमन, तन्द्रा, कृशता, अरुचि और भ्रम ( चक्कर आना ) होता है तथा उसके उदर की वृद्धि भी होती है। इसी को पारिगर्भिक या परिभव कहते हैं। इस रोग में दीपन ओषधियों का प्रयोग करना चाहिये ॥ १३३-१३४ ॥

अथ दन्तोद्भेदजरोगानाह—

दन्तोद्भेदः शिशोः सर्वरोगाणां कारणं स्मृतम् । विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ॥१३५
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥ १३६ ॥

*कारणमित्यन्वयः । पोथक्याः=वर्त्मरोगविशेषस्य ॥ १३५-१३६ ॥

दन्तोद्भेदजन्य रोग—दांतों का निकलना प्रायः बच्चों के सब रोगों का कारण होता है। किन्तु विशेषतः दन्तोद्भेद से ज्वर, अतिसार, खांसी, वमन, शिर में पीड़ा, नेत्राभिष्यन्द, पोथकी ( रोहा ) और विसर्प रोग होते हैं ॥ १३५-१३६ ॥

अथ बालरोगचिकित्सामाह—

भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु । तदेव कार्यं बालानां किन्तु दाहादिकं विना ॥१३७॥

*दाहादिकं विना=अग्निदाहादिक्षारवमनविरेचनाशिराव्यधादिकं विना । महाकष्टे चोत्पन्ने वमनविरेकाद्यपि दद्यात् । यत आह सुश्रुतः—

"विरेकवस्तिवमनान्यृते कुर्याच्च नात्ययादि"ति ।

*अत्ययात्=विनाशकरकष्टात् । ऋते=विना ॥ इति ॥ १३७ ॥

त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते । अतस्तदेव भैषज्यं मात्रा तत्र कनीयसी ॥१३८॥

बालरोग चिकित्सा—ज्वरादि रोगों में बड़ों की जो चिकित्सा पहले कही गई है वही चिकित्सा बच्चों के उन २ रोगों में भी करना चाहिये किन्तु वमन, विरेचन, अग्निदाह, क्षारप्रयोग शिरावेधादि नहीं करना चाहिये। परन्तु आत्ययिक अवस्थाओं में इन्हें भी कर सकते हैं। क्योंकि सुश्रुत ने कहा है कि-विनाशकारक कष्ट ( आत्ययिक रोग ) को छोड़ कर अन्य दशाओं में बच्चों में वमन, विरेचन तथा वस्ति आदि का प्रयोग न करना चाहिये। चूंकि बड़ों के दोष और दूष्य तथा तज्जन्य ज्वरादि रोगभी वही होते हैं जो बच्चों के, इस लिये उनकी चिकित्सा भी बड़ों की ही तरह करनी चाहिये केवल अन्तर यही है कि बड़ों की अपेक्षा बच्चों के रोगों में उन ओषधियों को अत्यन्त कम मात्रा में देना चाहिये ॥ १३७-१३८ ॥

अथ बालस्य कनीयसीं मात्रामाह विश्वामित्रः—

विडङ्गफलमात्रं तु जातमात्रस्य भेषजम् । अनेनैव प्रमाणेन मासि मासि प्रवर्द्धयेत् ॥ १३९ ॥

*विडङ्गपरिमितं भेषजं चूर्णीकृत्य किंवा कल्कीकृत्याथवाऽवलेहीकृत्य दद्यादित्यर्थः । तन्त्रान्तरे त्वन्यथाऽभिहितम् ॥ १३९ ॥

विश्वामित्र के मतानुसार बालकों के लिये ओषधिकी मात्रा—बच्चों को पहले महीने में वायविडङ्ग के बराबर चूर्ण, कल्क अथवा अवलेह की मात्रा देनी चाहिये। प्रत्येक बाद के महीनों में एक एक विडंग के बराबर मात्रा बढ़ाते जाना चाहिये अर्थात् दूसरे महीने में दो विडंग के बराबर देना चाहिये। इसी प्रकार अन्य महीनों में समझना चाहिये। किन्तु तन्त्रान्तर में भिन्न प्रकार लिखा है ॥ १३९ ॥

प्रथमे मासि बालाय देया भैषज्यरक्तिका । अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥१४०॥
एकैकां वर्द्धयेत्तावद्यावत्संवत्सरो भवेत् । तदूर्ध्वं माषवृद्धिः स्याद्यावत्षोडश वत्सराः ॥१४१॥

*एकैकां रक्तिकां, तदूर्ध्वं=वर्षोपरि, माषवृद्धिः । प्रतिवर्षं पञ्चगुञ्जात्मकस्य माषस्य वृद्धिर्भवति । "गुञ्जाः पञ्चाद्यमाषक" इत्यमरसिंहः ॥ १४१ ॥

ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः । ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ॥१४२॥

*ततः—षोडशवत्सरोपरि ॥ १४२ ॥

चूर्णकल्कावलेहानामियं मात्रा प्रकीर्तिता । कषायस्य पुनः सैव विज्ञातव्या चतुर्गुणा ॥१४३॥

क्षीरपस्य शिशोर्देयमौषधं क्षीरसर्पिषा । धात्र्यास्तु केवलं देयं न क्षीरेणापि सर्पिषा ॥१४४॥

*क्षीरान्नादस्य पूर्ववत्क्षीरसर्पिषा ॥ १४४ ॥

अन्य ग्रन्थों का मत—एक महीने के बच्चे को एक रत्ती की मात्रा में ओषधि देनी चाहिये और इस ओषधि को मधु, दूध, मिश्री या घी से चटाना चाहिये। प्रति महीने की अवस्था के पीछे एक एक रत्ती बढ़ाता जाय। फिर एक वर्ष की अवस्था हो जाने पर प्रतिवर्ष ५ पांच रत्ती बढ़ावे। इस तरह सोलह वर्ष तक बढ़ाना चाहिये। अब यह सोलहवें वर्ष की मात्रा का परिमाण मनुष्य की ७० वर्ष की आयु तक चलता है। सत्तर वर्ष की आयु के बाद, बच्चों की मात्रा को जैसे २ बढ़ाया था वैसे ही वैसे वृद्धों की मात्रा घटानी चाहिये। उपर्युक्त मात्रा चूर्ण कल्क और अवलेह की बतलाई गई है। यदि काढ़ा देना हो तो उसकी मात्रा भी पूर्वोक्त क्रम से ही बढ़ाना-घटाना चाहिये, किन्तु मात्रा चौगुनी रहेगी अर्थात् एक मास के बच्चे को ४ रत्ती काढ़ा देना चाहिये और ४ रत्ती प्रतिमास बढ़ाना चाहिये और साल भर के बाद २० र० प्रतिवर्ष बढ़ाना चाहिये। दूध पीने वाले बच्चे को दूध और घी से दवा देनी चाहिये। दूध और अन्न दोनों चीज ग्रहण करने वाले को भी इसी प्रकार देना चाहिये। किन्तु माता को दूध, घी से दवा नहीं देना चाहिये। बल्कि जैसे कही गई हो उसी के अनुसार देना चाहिये ॥ १४०-१४४ ॥

अथ प्रकारान्तरेणौषधोपायनमाह सुश्रुतः—

*येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः । तेषु तत्कल्कसंलिप्तौ पाययेच्च शिशुं स्तनौ॥१४५*

बच्चों को ओषधि पिलाने का अन्य उपाय—जो ओषधि बच्चे के रोग के लिये हितकर हो उसका कल्क बनाकर माता के स्तनों ( चुचूक में ) में पोत कर बच्चे को स्तन पिलावे ॥ १४५ ॥

अथानभिभाषिबालस्यान्तर्गतरोगज्ञानोपायमाह—

अङ्गप्रत्यङ्गदेशे तु रुजा यत्रास्य जायते । मुहुर्मुहुः स्पृशति तं स्पृश्यमानेन रोदिति ॥ १४६ ॥

निमीलिताक्षो मूर्द्धस्थे रोगे नो धारयेच्छिरः। वस्तिस्थे मूत्रसङ्गार्त्तः क्षुधा तृडपि गच्छति १४७

विण्मूत्रसङ्गवैकल्याच्छर्द्याध्मानान्त्रकूजनैः। कोष्ठे व्याधीन्विजानीयात्सर्वत्रस्थांश्च रोदनैः॥१४८

न बोलने वाले बच्चों के रोगज्ञान का उपाय—बच्चे के जिस अङ्ग प्रत्यंग में पीड़ा होती है उसे बच्चा बार २ छूता है और उस स्थान को दूसरों के छूने पर रोता है। यदि बालक के मस्तक में पीड़ा हो तो आंख बन्द किये रहता और शिर को स्थिर नहीं रखता बल्कि गिराये रहता है। यदि बच्चे के मूत्राशय में कष्ट होतो उसे मूत्रावरोध होजाता है तथा भूख और प्यास नहीं लगती। यदि बालक को पाखाना न होता हो, विकलता, उलटी, आध्मान ( पेट फूलना ) और आँतोंमें गुड़गुड़ाहट हो तो उदर में कष्ट जानना चाहिये। और यदि बचा निरन्तर रोवे तो उस के समस्त शरीर में रोग जानना चाहिये ॥ १४६-१४८ ॥

अथ बालकस्य ज्वरादिरोगचिकित्सामाह—

सर्वं निवार्यते बाले स्तन्यं नव निवार्यते । मात्रया लङ्घयेद्धात्रीं शिशोरेतद्धि लङ्घनम् ॥१४९॥

*मात्रया लङ्घयेद्=लघु भोजयेत् ॥ १४९ ॥

बालक के ज्वरादि रोगों की चिकित्सा—बच्चों को सब पदार्थ रोगों में वर्जित है किन्तु दूध कदापि वर्जित नहीं है। यदि बच्चे को लंघन कराना हो तो उसकी माता को अल्प मात्रा में हलका आहार दे, यही बच्चे का लंघन है ॥ १४९ ॥

अथ सर्वज्वरेषु भद्रमुस्तादिकाथमाह—

भद्रमुस्ताऽभयानिम्बपटोलमधुकैः कृतः । कायः कोष्णः शिशोरेष निःशेषज्वरनाशनः ॥१५०॥

सब ज्वरों ( बच्चों के ) में भद्रमुस्तादि क्वाथ—नागरमोथा, हरड़, नीम, परोरा और मुलेठी का काढ़ा बच्चों के समस्त ज्वरों को नष्ट करता है ॥ १५० ॥

अथ ज्वरातिसारे चतुर्भद्रावलेहमाह—

घनकृष्णाऽरुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम्। शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं हरेत् १५१

*अरुणा=अतिविषा ॥ १५१ ॥

ज्वरातिसार में चतुर्भद्रावलेह—नागरमोथा, पीपर, अतीस, काकड़ासिंगी इनका चूर्ण शहद के साथ चाटने से बच्चों का ज्वर, अतिसार, खाँसी, श्वास और वमन दूर होता है ॥ १५१ ॥

अथातिसारे विल्वादिकाथमाह—

विल्वं च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च।
क्राथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ १५२ ॥

*जलम्=[ वाला ] ॥ १५२ ॥

अतिसार में विल्वादिक्काथ—बेल की गिरी, धव का फूल, सुगन्धवाला, लोध और गजपीपर इनका काढ़ा शहद मिलाकर पीने से अथवा इन्हीं का चूर्ण मधु के साथ चाटने से बच्चों का अतिसार नष्ट हो जाता है १५२ ॥

अथ दुर्धरातिसारे समङ्गाऽऽदिकाथमाह—

समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम्। दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् १५३

*समङ्गा=लज्जालुमूलम् ॥ १५३ ॥

दुर्धर अतिसार में समङ्गाऽऽदि क्काथ—लाजवन्ती की जड़, धव का फूल, लोध और सारिवा इनसे बनाया हुआ काढ़ा शहद मिलाकर देने से बच्चों का दुर्धर अतिसार भी नष्ट हो जाता है ॥१५३॥

अथामातीसारे विडङ्गादिचूर्णमाह—

विडङ्गान्यजमोदा च पिप्पलीतण्डुलानि च। एषामालोड्य चूर्णानि सुखं तप्तेन वारिणा।
आमे प्रवृत्तेऽतीसारे कुमारं पाययेद्भिषक् ॥ १५४ ॥

आमातिसार में विडङ्गादि चूर्ण—वायविडङ्ग, अजमोदा, और पीपर के दाने इन सबका सूक्ष्म चूर्ण सुखोष्ण जल में घोल कर बच्चे को पिलाने से आमातीसार नष्ट हो जाता है ॥ १५४ ॥

अथ रक्तातीसारे मोचारसादियवागूमाह—

मोचारसः समङ्गा च धातकी पद्मकेशरम्। पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥१५५॥

१*मोचारसो लज्जालुमूलं, धातकीपुष्पम्, कमलकेशरमेतेषां समुदितं तोलकैकं गृह्णीयात्। तण्डुलाः सपादतोलकाः १।, जलमेकादशतोलकम् ११, सर्वमेकीकृत्य यवागूः साधनीया ॥ १५५ ॥

रक्तातिसार में मोचरसादि यवागू—मोचरस, लाजवन्ती की जड़, धव का फूल और कमल की केशर ये सब मिलाकर एक तोला, चावल सवा तोला और पानी ११ तो० इन सबको एक में पकावे। यह यवागू बच्चों को खिलाने से रक्तातीसार दूर कर देती है ॥ १५५ ॥

अथातीसारे नागरादिकाथमाह—

नागरातिविषामुस्तबालकेन्द्रयवैः शृतम्। कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥१५६॥

अतिसार रोग में नागरादिक्काथ—सोंठ, अतीस, नागरमोथा, सुगन्धवाला, इन्द्रजव इनका काढ़ा बनाकर बालकों को पिलावे तो सब प्रकार का अतिसार दूर होता है ॥ १५६ ॥

अथ प्रवाहिकाया लाजाऽऽदिचूर्णमाह—

लाजा सयष्टीमधुका शर्करा क्षौद्रमेव च। तण्डुलोदकयोगेन क्षिप्रं हन्ति प्रवाहिकाम् ॥१५७॥

प्रवाहिका रोग में लाजाऽऽदि चूर्ण—धान का लावा, मुलहठी और शक्कर तथा मधु इन सबको मिलाकर चावल के धोवन के साथ पीने से बालकों की प्रवाहिका दूर होती है ॥ १५७ ॥

अथ ग्रहण्यादिरोगे रजन्यादिचूर्णमाह—

रजनी सरलो दारु बृहती गजपिप्पली । पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥१५८॥
दीपनं ग्रहणीं हन्ति मारुतार्त्तिं सकामलाम् । ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत् १५९

ग्रहणी आदि रोगमें रजन्यादि चूर्ण—हलदी, देवदारु, दारुहल्दी, कटेरी, गजपीपरि, गदह-पुर्ना और सौंफ इनका चूर्ण बनाकर मधु और घी के साथ चाटने से बालकों की ग्रहणी, वायुसम्बन्धिनी पीड़ा, कामला, ज्वर, अतिसार, पाण्डु ये सब नष्ट हो जाते हैं ॥ १५८–१५९ ॥

अथ कासघ्नं मुस्तकादिस्वरसमाह—

मुस्तकातिविषावासाकणाश्रृङ्गीरसं लिहेत् । मधुना मुच्यते बालः कासैः पञ्चभिरुत्थितः १६०

खांसी को नष्ट करने वाला मुस्तकादिस्वरस—नागरमोथा, अतीस, अडूसा, पीपरि, काकड़ासिंगी इन सबका स्वरस बनाकर उसमें मधु मिलाकर चाटे तो बालकों की पाचों प्रकार की खांसी दूर होती है ॥ १६० ॥

अथ बालकानां पुराणकासोपरि केशरावलेहिकामाह—

व्याघ्रीसुमनसं जातीकेशरैरवलेहिका । मधुना चिरसञ्जाताञ्छिशोः कासान्व्यपोहति ॥१६१॥

बालकों के पुरानी खांसी पर केशरावलेह—कटेरी (भटकटैया), चमेली, जायफल तथा नागकेशर को पीसकर शहद के साथ चाटे तो बालकों की बहुत पुरानी खांसी दूर हो जाती है ॥ १६१ ॥

अथ कासश्वासे धान्यादिपानमाह—

धान्यं च शर्करायुक्तं तण्डुलोदकसंयुतम् । पानमेतत्प्रदातव्यं कासश्वासापहं शिशोः ॥१६२॥

कास स्वास में धान्यादिपान—धनियां और शक्कर इनको जल के साथ पीसकर चावल के धोवन के साथ पीने से बालकों की खांसी और श्वास दूर हो जाते हैं ॥ १६२ ॥

अथ द्राक्षाऽऽदिचूर्णमाह—

द्राक्षावासाऽभयाकृष्णाचूर्णं क्षौद्रेण सर्पिषा । लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा १६३

*तमकं=श्वासभेदम् ॥ १६३ ॥

द्राक्षाऽऽदिचूर्ण—दाख (मुनक्का), अडूसा, हरड़, पीपरि इन सबका चूर्ण करके मधु के साथ चाटे तो बालकों का श्वास, खांसी नष्ट होता है अर्थात् तमक श्वास भी नष्ट होता है ॥ १६३ ॥

अथ हिक्कावमिघ्नं कटुकरोहिण्यवलेहमाह—

चूर्णं कटुकरोहिण्या मधुना सह योजयेत् । हिक्कां प्रशमयेत्क्षिप्रं छर्दिं चापि चिरोत्थिताम् १६४

हिक्का और वमन को नष्ट करने वाला कटुकरोहिणी अवलेह—कुटकी का चूर्ण बनाकर मधु के साथ चटाने से बालकों की हिचकी तथा बहुत पुराना वमन भी दूर हो जाती है ॥ १६४ ॥

अथ दुग्धवमिघ्नमवलेहमाह—

आम्रास्थिलाजसिन्धूत्थं सक्षौद्रं छर्दिनुद्भवेत् ॥ १६५ ॥
छर्दौ पीतं तु मेध्यन्तु स्तन्येन मधुसर्पिषा । द्विवार्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ १६६ ॥

*द्विवार्ताकी=बृहतीद्वयम् ॥ १६६ ॥

पञ्चकोलं यथा—

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ॥ १६७ ॥

अगर बालक दूध का वमन करता हो तो उसका अवलेह—आमकी गुठली, धान का लावा और सेन्धानमक, इन सबों का चूर्ण बना कर शहद ( मधु ) के साथ चटाने से बालक के दूध की उल्टी दूर हो जाती है । और कटेरी ( भटकटैया ) के फलों का स्वरस तथा बड़ी भटकटैया के फलों का स्वरस, पीपरि, पिपरामूल, चव्य, चीता और सोंठ जिसे पञ्चकोल कहते हैं । इन सबका चूर्ण बनाकर उपर्युक्त स्वरस के साथ चटाने से बालक के दूध का गिरना मानो मुख से निकलना बन्द हो जाता है ॥ १६५–१६७ ॥

अथानाहे वातशूले च सैन्धवाद्यवलेहमाह—

घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन्। आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशुः१६८

**आनाह तथा वातशूल में सैन्धवादि चूर्ण**—सेन्धानमक, सोंठ, इलायची, हींग और भारङ्गी इनका चूर्ण बना कर घी के साथ अथवा जल के साथ मिला कर खिलावें तो आनाह और वातशूल बन्द हो जाता है ॥ १६८ ॥

अथ मूत्राघातघ्नं कणाऽऽद्यवलेहमाह—

कणोषणासिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः। मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ १६९ ॥

**मूत्राघात को नष्ट करने वाला कणाऽऽद्यवलेह**—पीपरि, सोंठ, मिश्री, मधु, छोटी इलायची और सेन्धानमक इन सबका अवलेह बनाकर चटावें तो बालकों का मूत्राघात नष्ट हो जाता है ॥१६९॥

अथ कार्श्यहरयोगमाह—

यदा तु दुर्बलो बालः खादन्नपि च वह्निमान्। विदारीकन्दगोधूमयवचूर्णं घृतप्लुतम्।
खादयेत्तदनु क्षीरं शृतं समधुशर्करम् ॥ १७० ॥

**कार्श्यहरयोग**—उचित भोजन करने पर तथा जठराग्नि के दीपन होने पर भी जो बालक दुर्बल रहता है, उसको विदारीकन्द, गेहूं, जव का चूर्ण घी में मिलाकर खिलावे और ऊपर से मधु और मिश्री के साथ उबाला, हुआ दूध पिलावे तो बालक हृष्ट पुष्ट हो जाय ॥ १७० ॥

अथ शोथघ्नलेपमाह—

मुस्तं कूष्माण्डबीजानि भद्रदारुकलिङ्गकान्। पिष्ट्वा तोयेन संलिम्पेल्लेपोऽयं शोथहृच्छिशोः १७१

**शोथ नाश करने वाला लेप**—नागरमोथा, पेठे ( सफेद कोहड़ा ) का बीज, देवदारु और इन्द्रजव इन सबको पीस कर लेप करने से बालक का शोथ दूर हो जाता है ॥ १७१ ॥

अथ क्षतविसर्पविस्फोटज्वरहरक्काथमाह—

पटोलत्रिफलाऽरिष्टहरिद्राक्कथितं पिबेत्। क्षतवीसर्पविस्फोटज्वराणां शान्तये शिशुः ॥१७२॥

**क्षत-विसर्प-विस्फोटक और ज्वर को नाश करने वाला क्काथ**—परवर, त्रिफला, नीम और हरदी इनका काढ़ा बनाकर पीने से क्षत-विसर्प-विस्फोटक तथा ज्वर की शान्ति होती है ॥ १७२ ॥

अथ मुखस्रावहरक्काथमाह—

सारिवातिललोध्राणां कषायो मधुकस्य च। संस्राविणि मुखे शस्तो धावनार्थं शिशोः सदा ॥

**मुखस्राव को नष्ट करने वाला क्वाथः**—शारिवा, तिल, लोध और मुलहठी के क्वाथ से मुंह साफ किया जाय तो मुख का स्राव दूर होता है ॥ १७३ ॥

अथ मुखपाकहरप्रलेपमाह—

अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ॥ १७४ ॥

**मुख पक जाने पर प्रलेप**—पीपल की छाल और पत्तों को पीस कर मधु के साथ लेप करने से मुखपाक दूर होता है ॥ १७४ ॥

अथ बालानां रोदने चूर्णमाह—

पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्। बालो रोदिति यस्तस्मै लीढं दद्यात्सुखावहम्॥१७५॥

**बालक के अधिक रोने पर चूर्ण**—पीपल और त्रिफला का चूर्ण घी और मधु में मिलाकर चटावे तो बालकों का रोना दूर होता है ॥ १७५ ॥

अथ तालुकण्टकघ्नकल्कमाह—

हरीतकी वचा कुष्ठं कल्कं माक्षिकसंयुतम्। पीत्वा कुमारः स्तन्येनमुच्यते तालुकण्टकात्१७६

**तालुकण्टकनाशक कल्क**—हरड़, वच और कूट इनका कल्क बनाकर मधु और चावल के जल के साथ पिलावे तो तालुकण्टक रोग दूर होता है ॥ १७६ ॥

अथ कुकूणकहरलेपमाह—

फलत्रिकं लोध्रपुनर्नवे च सश्रृङ्गवेरं बृहतीद्वयं च।

आलेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्यमुदाहरन्ति ॥ १७७ ॥

कुकूणकहर लेप—हरड़, बहेड़ा, आँवला, लोध्र, गदहपुर्ना, अदरख, कटेरी ( छोटी और बड़ी ) इनको जल में पीसकर और कुछ गर्म करके लेप करने से कुकूणक रोग नष्ट होजाता है ॥ १७७ ॥

अथ नाभिशोथघ्नं स्वेदमाह—

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा । स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति १७८

नाभिशोथ को दूर करने वाला स्वेद—मिट्टी के ढेले को अग्नि में तपाकर दूध में बुझावे जबतक गर्म रहने पर ही उससे सेंके तो नाभि का सूजन दूर होती है ॥ १७८ ॥

अथ नाभिपाकघ्नतैलमवधूलनं चाह—

नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् । तैलमभ्यञ्जने शस्तमेभिश्चाप्यवधूलनम् ॥ १७९ ॥
दग्धेन छागशकृता नाभिपाकेऽवचूर्णनम् । त्वक्चूर्णैः क्षीरिणां वाऽपि कुर्याच्चन्दनरेणुना॥१८०॥

नाभिपाकनाशक तैल और अवधूलन—नाभि पक जाय तो हल्दी, लोध, फूल प्रियङ्गु और मुलहठी इनके कल्क से पकाये हुये तेल से नाभि पर मालिस करे और इनका चूर्ण बुरबुराने से नाभिपाक रोग दूर हो जाता है।

अथवा वटादि पंचक्षीरी वृक्षों का, अथवा चन्दन का अथवा बकरी की लेंड़ी को जलाकर उसके राख को बुरबुरावे तो नाभिपाक रोग दूर हो जाता है ॥ १७९-१८० ॥

अथ गुदपाकघ्नयोगमाह—

गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् । रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ।
शङ्खयष्ट्यञ्जनैश्चूर्णं शिशूनां गुदपाकनुत् ॥ १८१ ॥

*अञ्जनं—रसाञ्जनम् ॥ १८१ ॥

गुदपाक को नाशन करने वाले योग—बालकों की गुदा पकती हो तो पित्तनाशक चिकित्सा करनी चाहिये-विशेषकर रसौत को पिलावे और उसी का लेप भी करे तो गुदापाक रोग अच्छा होता है। शंख, रसौत, मुलेठी का चूर्ण भी इस रोग को दूर करता है ॥ १८१ ॥

अथाहिपूतने लेपमाह—

शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने ॥ १८२ ॥

अहिपूतना रोग में लेप—शंख, सफेद सुरमा और मुलहठी इन सबको पीसकर लेप करने से अहिपूतन रोग दूर होता है ॥ १८२ ॥

अथ पारिगर्भिकोपायमाह—

पारिगर्भिकरोगे तु युज्यते वह्निदीपनम् ॥ १८३ ॥

पारिगर्भिक रोग में उपाय—अगर बालक को पारिगर्भिक रोग हुआ हो तो जठराग्नि को दीपन करने वाली औषधि देनी चाहिये ॥ १८३ ॥

अथ बालानां दन्तोद्भेदजरोगशमोपायमाह—

दन्तपालीं तु मधुना चूर्णेन प्रतिसारयेत् । धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा ॥ १८४ ॥
दन्तोत्थानभवा रोगाः पीडयन्ति न बालकम् । जाते दन्ते हि शाम्यन्ति यतस्तद्धेतुका गदाः१८५

बालकों के दांत के निकलने के समय जो पीड़ा होती है उसके शमन करने का उपाय—धव का फूल और पीपर के चूर्ण मधु में मिलाकर बालक के मसूड़ों को घिसे, अथवा मधु के साथ आँवला के रस से मसूड़ों को घिसे तो दाँत के निकलने के समय के रोगों से बालक को दुःख नहीं होता। क्योंकि दाँत निकल जाने के पश्चात् सब रोग आपसे आप शान्त हो जाते हैं॥१८४-१८५॥

अथ बालानां शक्तिवर्द्धकप्रयोगानाह—

सौवर्णंसुकृतं चूर्णं कुष्ठं मधु घृतं वचा । मत्स्याक्षकं शङ्खपुष्पी मधु सर्पिः सकाञ्चनम् ॥
अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा । सहेमचूर्णं कैडर्यं श्वेता दूर्वा घृतं मधु ॥ १८६ ॥

चत्वारोऽभिहिताः प्राशा अर्द्धश्लोकसमापनाः। कुमाराणां वपुर्मेधाबलपुष्टिकराः स्मृताः १८७

*सौवर्णं चूर्णं=चतुर्ष्वपि योगेषु मारितसुवर्णचूर्णम्। मत्स्याक्षकं="ब्राह्मी" इति लोके, "वकम" इत्येके। अर्कपुष्पी=अर्कसदृशपुष्पी लता। कैटर्यं=कट्फलम्। दूर्वा=श्वेतदूर्वा। संवत्सरं यावदेते योगाः प्रयोज्याः, "द्वादशवर्षाणी"ति के चित्॥ १८६-१८७॥

बालकों की शक्ति को बढ़ाने वाले योग—सोने का भस्म (अच्छी प्रकार से चूर्ण किया हुआ), कूट, शहद, घी और बालवच इनका चूर्ण करके खिलाने से सामर्थ्य, बुद्धि तथा बल बढ़ता है और पुष्टि होती है। अथवा सोने का भस्म, ब्राह्मी, शंखाहुली, शहद और घी इनको एकत्रित करके बच्चे को खिलावे। अथवा सोने का भस्म, अर्कपुष्पी, शहद, घी और वच अथवा सोने का भस्म, कायफल, सफेद दूर्वा, घी और शहद, यह प्रयोग १ वर्ष पर्यन्त बालक को देना चाहिये, कई वैद्यों का कहना है कि इन योगों को १२ वर्ष की अवस्था तक देना चाहिये॥ १८६-१८७॥

अथ लाक्षाऽऽदितैलमाह—

लाक्षारसे समे तैलं मस्तुन्यथ चतुर्गुणे। रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुतैः॥ १८८॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभिः। संसिद्धं ज्वररक्षोघ्नं बलवर्णकरं शिशोः॥ १८९॥

इति श्रीमिश्रलटकनतनयश्रीमन्मिश्रभावविरचिते भावप्रकाशे चिकित्सा-प्रकरणे एकसप्ततितमो बालरोगाधिकारः समाप्तः॥ ७१॥

चतुर्थो भागः समाप्तः॥ ४॥

लाक्षाऽऽदि तैल—तिल का तेल और लाख का रस सम भाग और चौगुना दही का मस्तु (पानी) इन सबको एकत्रित करके रास्ना, चन्दन, कूठ, असगन्ध, हल्दी, सौंफ, देवदारु, मुलहठी, मुर्वा, कुटकी और रेणुका इनका कल्क डाल कर तेल को सिद्ध करे। यह तेल बालकों के ज्वर को तथा भूतादिबाधा को दूर करता है। और बल को उत्पन्न करता है शरीर के वर्ण को अच्छा करता है॥ १८८-१८९॥

इति श्री "भावप्रकाश" भावप्रकाशकारिकायां "विद्योतिनी" नामिकायां भाषाटीकायां-मध्यखण्डे चिकित्साप्रकरणे एकसप्ततितमो बालरोगाधिकारः समाप्तः॥ ७१॥

मध्यमखण्डं च समाप्तम्।

॥ श्रीः ॥

# भावप्रकाशः

## तत्र चिकित्साप्रकरणे ।

## अथोत्तरखण्डम् ।

### अथ द्विसप्ततितमो वाजीकरणाधिकारः ॥७२॥

अथ वाजीकरणस्य लक्षणमाह—

यद् द्रव्यं पुरुषं कुर्याद्वाजीव सुरतक्षमम् । तद्वाजीकरमाख्यातं मुनिभिर्भिषजां वरैः ॥ १ ॥

टीकाकर्तुर्मङ्गलाचरणम्—

श्रीविश्वेशस्यानुकम्पावशेन विश्ववन्द्ये "भावमिश्र" प्रणीते ।
अन्त्ये खण्डे नाम भावप्रकाशे व्याख्या विद्योतिन्यभिख्यां करोमि ॥ १ ॥

वाजीकरण के लक्षण—जो पदार्थ पुरुष को मैथुन करने में घोड़े के समान शक्तिशाली बनाते हैं, उनको मुनि और श्रेष्ठ वैद्य लोग वाजीकरण कहते हैं ॥ १ ॥

तत्र प्रसङ्गात् क्लैब्यस्य लक्षणं संख्यां निदानं चाह—

क्लीवः स्यात्सुरताशक्तस्तद्भावः क्लैब्यमुच्यते । तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते ॥२॥

क्लीव ( नपुंसक ) के लक्षण, संख्या और निदान—जो पुरुष मैथुन करने में असमर्थ हो उसे क्लीव या नपुंसक कहते हैं और उस क्लीव के धर्म को 'क्लैब्य' कहते हैं। यह क्लैब्य सात प्रकार का होता है। उनका निदान आगे कहता हूँ ॥ २ ॥

तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पतत्यतो नॄणां क्लैब्यं समुपजायते ।
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् ॥ ३ ॥

*तैस्तैर्भावैः=भयशोकक्रोधादिभिः । अहृद्यैः=हृदयाहितैः, दुःखकरत्वात् । क्षते=पीडिते, अस्वस्थीकृत इति यावत् । ध्वजः=शिश्नः । तथा च—

*"ध्वजं चिह्ने पताकायां मेहने शौण्डिकेऽपि च" इति विश्वप्रकाशः । पतति—न तूत्थति । सम्प्रयोगो=मैथुनम् ॥ २-३ ॥

मैथुन करने वाले पुरुष का मन-भय, शोक तथा क्रोधादि विकारों से अस्वस्थ होकर अथवा जिस पर अरुचि हो ऐसी स्त्री के साथ मैथुन करने से शिश्न झुक जाता है अर्थात् मुर्झा जाता है इसको 'मानसिक क्लैब्य' कहते हैं ॥ ३ ॥

कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः । पित्ताच्छुक्रक्षयो दृष्टः क्लैब्यं तस्मात्प्रजायते ॥ ४ ॥

*कटुकादिनाऽतिमात्रेण प्रवृद्धेन पित्तेन शुक्रस्य दग्धत्वात्क्लैब्यं भवति पित्तजमिति द्वितीयम् ॥ ४ ॥

पित्तज क्लैब्य—तीखे, खट्टे, गरम और खारे पदार्थों का अत्यधिक सेवन करने से बढ़े हुये पित्त के कारण वीर्य का क्षय होने से जो क्लीवता उत्पन्न होती है उसको 'पित्तज क्लैब्य' कहते हैं ॥४॥

अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥५॥

*शुक्रक्षयेण तृतीयम् ॥ ५ ॥

वीर्यक्षयजन्य क्लैब्य—जो मनुष्य अत्यन्त मैथुन करता है किन्तु वाजीकरण पदार्थों का सेवन नहीं करता उस पुरुष का शिश्न ऊपर को नहीं उठता उसे 'वीर्यक्षयजन्य क्लैब्य' कहते हैं ॥५॥

महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत्। वीर्यवाहिशिराच्छेदान्मेहनानुन्नतिर्भवेत् ॥ ६ ॥

५ रोगजन्य क्लैव्य—लिङ्ग में किसी प्रकार के भयंकर रोग होने से जो क्लीवता होती है उसको 'रोगजन्य क्लैव्य' कहते हैं। वीर्यवाहिनी शिराओं के कट जाने से लिङ्ग उठने में असमर्थ हो जाता है। इसे 'शिराच्छेदजन्य क्लैव्य' कहते हैं ॥ ६ ॥

बलिनः क्षुब्धमनसो निरोधाद् ब्रह्मचर्यतः। षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ॥७॥

*बलिनः=पुष्टस्य। क्षुब्धमनसः=कामात्सज्वलितमनसः। ब्रह्मचर्यम्=अमैथुनं, तस्मान्निरोधाच्छुक्रस्य क्लैव्यं भवति ॥ ७ ॥

६ शुक्रस्तम्भजन्य क्लैव्य—शरीर के पुष्ट होने पर और कामाग्निद्वारा मन क्षुभित होने पर ब्रह्मचर्य को धारण करके वीर्य को रोक रखने से जो नपुंसकता उत्पन्न होती है उसे 'शुक्रस्तम्भजन्य क्लैव्य' कहते हैं ॥ ७ ॥

जन्मप्रभृति यत्क्लैव्यं सहजं तद्धि सप्तमम् ॥ ८ ॥

७ सहज क्लैव्य—जो जन्म से ही नपुंसक होता है उसे 'सहजक्लीव' कहते हैं ॥ ८ ॥

अथासाध्यक्लैव्यमाह—

असाध्यं सहजं क्लैव्यं मर्मच्छेदाच्च यद्भवेत् ॥ ९ ॥

*यद् मर्मच्छेदाद्=वीर्यवाहिशिराच्छेदात् ॥ ९ ॥

असाध्य क्लैव्य—उपर्युक्त सात प्रकार के नपुंसकों में से 'सहज क्लैव्य' और 'शिराच्छेदजन्य क्लैव्य' असाध्य होते हैं ॥ ९ ॥

अथ क्लैव्यस्य चिकित्सायां सामान्यविधिमाह—

क्लैव्यानामिह साध्यानां कार्यो हेतुविपर्ययः। मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम् ॥१०

क्लैव्य की सामान्य चिकित्सा—साध्य नपुंसकता को दूर करने के लिये जिन कारणों से नपुंसकता उत्पन्न हुई हो उन कारणों का त्याग करना चाहिये। क्योंकि उन कारणों का त्याग करना ही मुख्य चिकित्सा है ॥ १० ॥

अथ क्लैव्यस्य चिकित्सायां वाजीकरणविधिमाह—

नरो वाजीकरान्योगान्सम्यक्शुद्धो निरामयः। सप्तत्यन्तं प्रकुर्वीत वर्षादूर्ध्वं तु षोडशात् ॥११॥
न च वै षोडशादर्वाक्सप्तत्याः परतो न च। आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥१२॥
क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः। अकालमरणञ्च स्याद्भजतः स्त्रियमन्यथा ॥ १३ ॥

*स्त्रीभजनविधिर्विस्तरतो रात्रिचर्यायां लिखितोऽस्ति, तत्र द्रष्टव्यः ॥ ११-१३ ॥

क्लैव्य चिकित्सा के लिये वाजीकरण विधि—रोगहीन पुरुष को वमन-विरेचनादि (पञ्चकर्म) द्वारा भली भांति शरीर को शुद्ध करके १६ वर्ष की अवस्था से ७० वर्ष पर्यन्त वाजीकरण द्रव्यों का सेवन करना चाहिये। दीर्घ जीवन चाहने वाले पुरुष को चाहिये कि १६ वर्ष की आयु के पूर्व और ७० वर्ष के पश्चात् स्त्रीप्रसङ्ग न करे। अयोग्य प्रकार से स्त्री का सेवन करने वाले पुरुषों को क्षय, वृद्धि और उपदंश आदि असाध्य रोग उत्पन्न होकर अकाल में ही मार डालते हैं। स्त्री-प्रसङ्ग करने की विधि रात्रिचर्या के प्रकरण में विस्तारपूर्वक कही गई है, वहां पर उसे देख लेना चाहिये ॥ ११-१३ ॥

विलासिनामर्थवतां रूपयौवनशालिनाम्। नराणां बहुभार्याणां विधिर्वाजीकरो हितः ॥१४॥
स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम्। योषित्प्रसङ्गात्क्षीणानां क्लीवानामल्परेतसाम् ॥१५
हिता वाजीकरा योगाः प्रीणयन्ति बलप्रदाः। एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया ॥१६॥

विलास करने वाले, धनवान, रूप और यौवन से सम्पन्न पुरुषों को वाजीकरण विधि का सेवन करना हितकारक है तथा जो पुरुष वृद्ध होने पर भी स्त्री-सम्भोग करने की इच्छा रखते हैं, उन लोगों को और स्त्रियों के अत्यन्त प्रिय होने की इच्छा रखने वालों को, स्त्री-प्रसङ्ग से क्षीण हुये, साध्य नपुं-

सक्त और अल्प वीर्य वाले पुरुषों को वाजीकरण का सेवन करना हितकारक, बलदायक, और पुष्टि-कारक होता है। पुष्ट शरीर वाले मनुष्यों को भी देश-कालादि पर ध्यान देकर वाजीकरण का सेवन करना चाहिये ॥ १४-१६ ॥

अथ वाजीकरणवस्तून्याह—

भोजनानि विचित्राणि पानानि विविधानि च ।
गीतं श्रोत्राभिरामाश्च वाचः स्पर्शसुखास्तथा ॥ १७ ॥
यामिनी चन्द्रतिलका कामिनी नवयौवना । गीतं श्रोत्रमनोज्ञञ्च ताम्बूलं मदिरा स्रजः ॥१८॥
गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च । मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् ॥१९॥

वाजीकरण वस्तुयें—अनेकों प्रकार के विचित्र भोजन, विविध प्रकार के पीने के पदार्थ, गाना, कर्णप्रिय मधुर वचन, त्वचा को प्रिय लगने वाले वस्त्र-स्पर्श तथा आभूषणादि, चन्द्रमायुक्त रात्रि, नवयौवना स्त्री, कर्ण और मन को प्रिय लगने वाले गानादि, ताम्बूल, मदिरा, माला, सुगन्धित द्रव्य, सुन्दर, मनोहर, चित्र-विचित्र पुष्पोद्यान, मन को प्रसन्न रखने वाले कर्म नपुंसकता को दूर करके घोड़े के समान शक्ति प्रदान करते हैं ॥ १७-१९ ॥

माक्षीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गघृतानि लिह्यात् ।
एकाधविंशतिदिनानि गदार्दितोऽपि साशीतिकोऽपि रमयेत्प्रमदां युवेव ॥ २० ॥

सोनामाखी, मधु, पारद ( पारद भस्म या रससिन्दूर ), लौह भस्म, हरड़, शिलाजीत, वायविडंग और घी इन सबको मिला कर २१ दिन चाटने से रोगी तथा ८० वर्ष का वृद्ध भी नौजवान पुरुष की भाँति स्त्रीरमण करता है ॥ २० ॥

सत्त्वं गुडूच्या गगनं सलोध्रमेलासितामागधिकासमेतम् ।
एतत्समेतं मधुनाऽवलीढं रामाशतं सेवयतीव षण्ढः ॥ २१ ॥

गुरुच की सत्व, अभ्रकभस्म, हरतालभस्म, इलायची, खांड और पीपर इनको शहद में मिला कर चाटे तो नपुंसक भी सौ स्त्रियों से रमण करता है ॥ २१ ॥

गवां विरूढवत्सानां सिद्धं पयसि पायसम् । गोधूमचूर्णञ्च तथा सितामधुघृतान्वितम् ।
भुक्त्वा हृष्यति जीर्णोऽपि दश दारान्व्रजत्यपि ॥ २२ ॥

पुष्ट बछड़े वाली गाय के दूध की खीर तथा ( घी में भुना हुआ ) गेहूँ का चूर्ण दूध में पकाकर और घी मिला कर सेवन करने से वृद्ध पुरुष को भी कामोत्तेजना उत्पन्न होती है और वह दश स्त्रियों से प्रसंग कर सकता है ॥ २२ ॥

अथ वाजीकररसालामाह—

दध्नोऽर्द्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः-
प्रस्थं क्षौद्रपलं पलञ्च हविषः शुण्ठ्याश्च माषाष्टकम् ।
तद्वन्माषचतुष्टयं मरिचतः कर्षं लवङ्गं तथा
दत्त्वा शुक्लपटे शनैः करतलेनोन्नाम्य विस्रावयेत् ॥ २३ ॥
मृद्भाण्डे मृगनाभिचन्दनरसामृष्टेऽगुरुद्धूपिते
कर्पूरेण सुगन्धितं तदखिलं संलोड्य संस्थापयेत् ॥
स्वस्यार्थं मकरध्वजेन रचिता ह्येषा रसाला स्वयं-
भोक्तुर्मन्मथदीपनी सुखकरी कान्तेव नित्यं प्रिया ॥ २४ ॥

वाजीकरण रसाला—तनिक खट्टा हुई मीठी दही १२८ तोला, चन्द्रमा के समान उज्ज्वल खांड़ ( चीनी ) ६४ तो०, शहद ४ तो०, घी चार तो०, सोंठ ४० रत्ती, कालीमिर्च २० रत्ती और लौंग १ तोला०, इन सबको एक में मिलाकर श्वेत वस्त्र में डालकर धीरे २ हाथों से मसलकर और फेर कर कस्तूरी और चन्दन से वासित और अगर से धूपित तथा कपूर से वासित मिट्टी के घड़े में रक्खे । इस

प्रकार वाजीकरण रसाला (श्रीखण्ड) सिद्ध होती है। इस रसाला को कामदेव ने स्वयं अपने लिये बनाया था। यह कामशक्ति को उद्दीप्त करने वाली, सुखदायक और कामिनी के समान सदा प्रिय लगने वाली रसाला है॥ २३-२४॥

---

## अथ रतिवर्द्धनयोगाः।

तत्र गोक्षुरादिमोदकमाह—

गोक्षुरेक्षुरबीजानि वाजिगन्धा शतावरी। मुशली वानरीबीजं यष्टी नागबला बला॥ २५॥
एषां चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम्। सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम्॥२६॥
चूर्णादष्टगुणं क्षीरं घृतं चूर्णसमं स्मृतम्। सर्वतो द्विगुणं खण्डं खादेदग्निबलं यथा॥ २७॥
वाजीकराणि भूरीणि संगृह्य रचितो यतः। तस्माद्बहुषु योगेषु योगोऽयं प्रवरो मतः॥ २८॥

**गोक्षुरादि मोदक**—गोखरू, तालमखाना, असगन्ध, सतावर, मूसली, केवाँच के बीज, मुलेठी, गँगेरन और खिरेटी (वरियारा) इन सबके चूर्ण को अठगुने गोदुग्ध में पकावे, गाढ़ा हो जाने पर इसे सब ओषधियों के बराबर गोघृत में भूने फिर इन सबसे दूनी चीनी उसी में छोड़कर लड्डू बनाकर पाचनशक्ति के अनुसार सेवन करे। यह गोक्षुरादि मोदक बहुत सी वाजीकरण ओषधियों को संग्रह करके बनाया गया है इसलिये यह अनेक योगों से उत्तम है॥ २५-२८॥

अथ मदनमञ्जरीवटीमाह—

चत्वारो व्योमभागास्तदनु निगदितं भागयुग्मञ्च वङ्गं-
भागैकं शम्भुबीजं त्रितयमपि मृतं तत्समा सिद्धमूली।
चातुर्जातं सजातीफलमरिचकणा नागरं देवपुष्पं-
जातीपत्रञ्च भागद्वितयमपि पृथक्सर्वमेकत्र चूर्ण्यम्॥ २९॥
सर्वद्व्यंशा सिता स्याद् घृतमधुसहितं मोदकीकृत्य चैतत्-
खादेदग्निं समीक्ष्य प्रसभमभिनवानन्दसम्वर्द्धनाय।
योगो वाजीकराख्योऽयमिह निगदितो भैरवानन्दनाम्ना
निःशेषव्याधिहन्ता दलितबहुवधूद्दामकन्दर्पदर्पः॥ ३०॥

**मदनमञ्जरी वटी**—अभ्रक भस्म ४ भाग, वङ्गभस्म २ भाग, पारदभस्म १ भाग इन तीनों के बराबर भाँग; दालचीनी, तेजपात, इलायची, नागकेशर, जायफल, कालीमिर्च, पीपर, सोंठ, लौंग और जाविश्री प्रत्येक दो दो भाग लेकर चूर्ण बनाले। फिर इन सबकी दूनी चीनी डालकर घी और शहद के साथ लड्डू बना ले। जठराग्नि के बलाबल के अनुसार इन लड्डुओं को मात्रानुसार खावे। इसके सेवन करने से तत्काल ही कामदेव के समान प्रबल आनन्द प्राप्त होता है 'भैरवानन्द योगी' ने इस योग को कहा है। यह योग सम्पूर्ण रोगों को नष्ट करने वाला और बड़ी २ कामिनी स्त्रियों के कामाभिमान को नष्ट करने की शक्ति उत्पन्न करने वाला है॥ २९-३०॥

अथ बस्ताण्डकच्छपाण्डयोर्वाजीकरयोगावाह—

पिप्पलीलवणोपेते बस्ताण्डे घृतसाधिते। कच्छपस्याथवा खादेत्तत्तु वाजीकरं भृशम्॥३१॥

**बस्ताण्ड और कच्छपाण्ड का वाजीकरण योग**—बकरे के अण्डकोषों और कछुये के अण्डों को घी में भूनकर उसमें पीपर और सेंधानमक का चूर्ण डालकर खाने से घोड़े के सदृश मैथुन करने की सामर्थ्य प्राप्त होती है॥ ३१॥

अथ श्रीरतिवल्लभपूगपाकमाह—

पूगं दक्षिणदेशजं दशपलोन्मानं भृशं कर्त्तयेत
तत्स्विन्नं जलयोगतो मृदुतरं सङ्कुट्य चूर्णीकृतम्।
तच्चूर्णं पटशोधितं वसुगुणे गोशुद्धदुग्धे पचेद्-
द्गव्याज्याञ्जलिसंयुतेऽतिनिबिडे दद्यात्तुलार्द्धां सिताम्॥ ३२॥
पक्वं तज्ज्वलनात्क्षितिं प्रति नयेत्तस्मिन्पुनः प्रक्षिपेद्-
यद्यत्तत्तदुदाहरामि बहुला दृष्टाऽऽदरात्संहिताः।

